श्येनशैलयोर्द्वितीयस्तु मेषयोर्मल्लयोर्वा । हस्ततरुसंयोगात्कायतरुसंयोगः संयोगजः ॥

विभक्तव्यवहारासाधारणं कारणं विभागः । सोऽपि द्विविधः कर्मजो विभागजश्चेति । कर्मजोऽपि द्विविधोऽन्यतरकर्मज उभयकर्मजश्चेति । आद्यः श्येनशैलयोर्द्वितीयस्तु मेषयोर्मल्लयोर्वा । हस्ततरुविभागात्कायतरुविभागो विभागजः[31] । संख्यादयः पञ्च सर्वद्रव्यवृत्तयः ॥

परव्यवहारासाधारणं कारणं परत्वम् । अपरव्यवहारासाधारणं कारणमपरत्वम् । ते द्विविधे दिक्कृते कालकृते चेति । यो यदपेक्षया ज्येष्ठस्तत्र तदवधिकं परत्वं कालकृतम् । यो यदपेक्षया कनिष्ठस्तत्र तदवधिकमपरत्वं कालकृतम् । अत्र कालपिण्डसंयोगोऽसमवायी ज्येष्ठत्वकनिष्ठत्वज्ञानं निमित्तं तन्नाशश्च तन्नाशनिमित्तम्[a] । एतेऽनित्यद्रव्य[b] एव । यो यदपेक्षया दूरस्थस्तत्र तदवधिकं परत्वं दिक्कृतम् । यो यदपेक्षया संनिहितस्तत्र तदवधिकमपरत्वं दिक्कृतम् । अत्र दिक्पिण्डसंयोगोऽसमवायी दूरत्वसंनिहितत्वज्ञानं निमित्तं तन्नाशश्च तन्नाशनिमित्तम्[c] । एते मूर्तद्रव्य[d] एव ॥

[e]बुद्धित्वसामान्यवती [f]बुद्धिः[32] । सा द्विविधा स्मृतिरनुभवश्च । संस्कारजन्यं[g] ज्ञानं स्मृतिः[33] । यथा सा[h] मणिकर्णिका स विश्वेश्वर इत्यादि । तत्र पूर्वानुभवः करणं संस्कारो व्यापारः । न च सोऽयं देवदत्त इति प्रत्यभिज्ञायामतिव्याप्तिः । तत्र संस्कारजनिततत्ता[i] स्मृतिरेव हेतुर्न तु संस्कारोऽपीत्यतिव्याप्तिविरहात्[j] । स्मृतिभिन्नं ज्ञानमनुभवत्व[k]जातिमान्वानुभवः[l] । स द्विविधः प्रमाप्रमा चेति । प्रमाणाभासजन्योऽयथार्थानुभवोऽप्रमा । सोऽपि द्वेधा भ्रमसंशयभेदात् । विपरीत[m]निर्णयो भ्रमः ।

---

a. E. omits from अत्र to निमित्तम् and C. omits from अत्र to द्रव्य एव. b. D. जन्यद्रव्य°; E. जन्यद्रव्यमात्र°. c. C. E. omit from अत्र to निमित्तम्. d. E. °द्रव्यमात्र°. e. C. E., here follows a description of गुरुत्व, द्रवत्व, स्नेह and शब्द, but the order in the text and in A. B. D. F. is in accordance with the *Vaisheshika Sutra*, *vide* note No. 4. f. A. B. D. add अर्थप्रकाशो वा०. g. A. B. C. E. read संस्कारमात्र०. h. D. omits सा. i. A. तन्नाश०. j. C. E. omit from न च सोऽयं, &c. to विरहात् k. C. E. omit अनुभवत्वजातिमान्वा. l. E. here adds स चतुर्विधः, &c., and proceeds with a short explanation of प्रत्यक्ष, &c. m. E. विपर्ययज्ञानं भ्रमः.

यथा पीतः शङ्खः लोहितः स्फटिकः । एकस्मिन्धर्मिणि विरुद्धनानाकोटिकं ज्ञानं संशयः । यथा दूरवर्ति[a]न्युच्चैस्तरेऽयं स्थाणुर्वा पुरुषो वेति । यथार्थानुभवः प्रमा । फलवत्प्रवृत्तिजनन[b]योग्यत्वं च यथार्थत्वम् । स्मृत्यनुभव[c]साधारणं प्रमाकरणं प्रमाणम्[54] ॥

व्यापारवत्कारणं करणम् । यथा छिदिक्रियां प्रति कुठारः । तज्जन्यत्वे सति तज्जन्यजनको व्यापारः । यथा कुठारदारुसंयोगः । अनन्यथासिद्धनियतपूर्ववृत्ति[d] कारणम्[55] । यथा तन्त्वादिकं पटस्य कपालादिकं घटस्य । अन्यथासिद्धिशून्यमनन्यथासिद्धम् । अन्यथासिद्धिस्त्रिविधा । येन सहैव यस्य यं प्रति पूर्वभावोऽवगम्यते तेन तस्य तं प्रत्यन्यथासिद्धिराद्या । यथा घटं प्रति दण्डेन दण्डरूपस्य दण्डत्वस्य च । दण्डेन सहैव दण्डरूपस्य दण्डत्वस्य वा घटं प्रति पूर्वभावग्रहात् । अन्यं प्रति [e]पूर्ववृत्तित्वे ज्ञात एव यस्य यं प्रति पूर्ववृत्तित्वं[f] गृह्यते तं प्रति तस्यान्यथासिद्धिर्द्वितीया । यथा घटं प्रत्याकाशस्य कुलालपितुश्च । आकाशस्य ह्याकाशत्वेन घटं प्रति पूर्ववृत्तित्वं[g] ग्राह्यम् । आकाशत्वं च शब्दसमवायिकारणत्वम् । तच्च शब्दनियतपूर्ववृत्ति[h]त्वघटितम् । तथा च शब्दं प्रति पूर्ववृत्तित्वे[i] ज्ञात एव घटं प्रति पूर्ववृत्ति[j]त्वग्रहाद्घटं प्रत्याकाशोऽन्यथासिद्धः । एवं कुलालपितुरपि कुलालपितृत्वेन घटं प्रति पूर्ववृत्तित्वं[k] ग्राह्यम् । कुलालपितृत्वं च कुलालजनकपुंस्त्वम् । तच्च कुलालनियतपूर्व[l]वृत्तित्वघटितम् । तथा च कुलालं प्रति पूर्ववृत्ति[m]त्वे ज्ञात एव घटं प्रति पूर्ववृत्ति[n]त्वग्रहाद्घटं प्रति कुलालपितान्यथासिद्धः । अन्यत्र क्लृप्तनियतपूर्व[o]वृत्तिन एव कार्यसंभवे तत्सहभूतत्वमन्यथासिद्धिस्तृतीया । यथा घटविशेषं प्रति दैवादागतरासभस्य । घटविशेषादन्यत्र घटान्तरे क्लृप्तनियतपूर्ववृत्ति[p]दण्डचक्रादेरेव घटविशेषस्यापि संभवे दण्डचक्रादिसहभूतो दैवागतरासभोऽन्यथासिद्धः । रासभसामान्यस्य घटसामान्यं प्रति हेतुत्ववारणाय नियतपूर्ववृ[q]त्तीत्यत्र नियतपदम् । तत्र यथोक्तान्यथासिद्धेरभावात् । न हि घटसामान्यादन्यत्र[r]पटादौ क्लृप्तनियतपूर्ववृत्ति

---

a. E. omits दूरवर्तिन्युच्चैस्तरेयम्. b. C. E. omit the whole clause. c. C. E. omit स्मृत्यनुभवसाधारणम्. d. F. वर्ति. e. F. वर्ति. f. F. वार्ति. g. F. वार्तित्वं. h. F. वर्ति०. i. F. वर्तित्वे. j. F. वर्तित्व. k. F. वर्तित्वं l. F. वर्तित्व. m. F. वर्तित्व. n. F. वर्तित्व. o. F. वर्तिन. p. F. वर्ति. q. F. वर्ति. r. A. °अन्यपट°.

तन्तुवेमादेर्वटसामान्यस्य संभवो येन यथोक्तान्यथासिद्धिः स्यात्। नियतपूर्ववृत्तित्वं चाव्य[a]वहितपूर्वकालावच्छेदेन कार्यदेशे सत्त्वम्। न चेदं रासभसामान्येऽस्त्यतो नातिव्याप्तिरिति संक्षेपः ॥

तच्च कारणं त्रिविधं समवाय्यसमवायिनिमित्तभेदात्। तत्र यत्समवेतं कार्यं[b] तत्समवायिकारणम्। यथा तन्तवः पटस्य कपालानि घटस्य पटघटादिश्च[c] स्वगतरूपादेः। समवायिकारणप्रत्यासन्नं[d]कारणमसमवायिकारणम्[36]। यथा तन्तुसंयोगः पटस्य। तस्य पटसमवायिकारणेषु तन्तुषु प्रत्यासन्नत्वात्कारणत्वाच्च। एवं तन्तुरूपादि पटरूपादेः। तस्यापि पटरूपादि समवायिकारणे पटे स्वाश्रयसमवेतत्वेन प्रत्यासन्नत्वात्कारणत्वाच्च। समवाय्यसमवायिकारणतातिरिक्तकारणतावन्निमित्तकारणम्। यथा तुरीवेमादिकं पटस्य दण्डचक्रादिकं घटस्य ॥

तच्च प्रमाणं[e] द्विविधं प्रत्यक्षानुमानभेदात्। शब्दादेश्चानुमानविधयैव प्रामाण्यमिति वैशेषिकमतम्। चतुर्विधमिति नैयायिकाः[37]। तदुक्तं सूत्रकृता—प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति। प्रत्यक्षप्रमाकरणं प्रत्यक्षम्। तच्चेन्द्रियात्मकम्। इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानं प्रत्यक्षम्[38]। तद्द्विविधं सविकल्पकनिर्विकल्पकभेदात्। विशेषणविशेष्यसंबन्धावगाहि प्रत्यक्षं सविकल्पकम्। यथायं घट इत्यादि। विशेषणविशेष्यसंबन्धानवगाहि प्रत्यक्षं निर्विकल्पकम्। तच्च घटघटत्व इत्याकारकमतीन्द्रियम्[39]। न त्वत्र मानाभावः। तदसत्त्वे सुप्तोत्थितस्यायं घट इति विशिष्टज्ञानं न स्याद्विशेषणीभूतस्य घटत्वस्याज्ञानात्। विशेषणज्ञानं विना विशिष्टज्ञानानुदयेन तस्य तद्धेतुत्वात्। प्रत्यक्षं[f][40] पुनरपि द्विविधं लौकिकालौकिकभेदात्। तत्र लौकिकप्रत्यक्षहेतुः संनिकर्षः षड्विधः। संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायो विशेषणता[g] चेति। तत्र संयोगेन द्रव्यग्रहः। इह घटोऽस्तीति चक्षुरादेर्घटादिना संयोगसत्त्वात्। एवं मनसा संयोगेनात्मग्रहोऽहमस्मीति[h]। संयुक्तसमवायेन गुणकर्मद्रव्यगतजातिग्रहः[i]। इह घटे

---

a. E. omits अव्यवहित. b. A. B. कार्यमुत्पद्यते. c. C. omits पटघटादिश्च, &c. d. A. B. °सन्नकार°. e. C. E. read तच्च प्रमाणं चतुर्विधम्। तदुक्तं, &c., and omit the rest. f. C. E. इन्द्रियार्थसन्निकर्षो द्विविधः. g. A. B. C. add °विशेष्यता°. h. C. E. omit एवं मनसा to इति. i. C. E omit this. E. is extremely incorrect at this point and is difficult to be followed.

रूपं चलनं द्रव्यत्वादिकमस्ति चक्षुरादिसंयुक्ते घटे रूपादीनां समवायात् । संयुक्तसमवेतसमवायेन गुणकर्मजातिग्रहः । घटगतरूपे रूपत्वादिकमस्ति घटगतचलने कर्मत्वादिकमस्तीति चक्षुरादिसंयुक्ते घटे समवेतं रूपादिचलनं च तत्र रूपत्वादेः कर्मत्वादेश्च समवायात् । समवायेन शब्दग्रहः । इह वीणाशब्दोस्तीति । कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम् । तत्र शब्दस्य समवायात् । समवेतसमवायेन शब्दत्वादिग्रहः । इह शब्दे[a] शब्दत्वगुणत्वादिकमस्तीति श्रोत्रसमवेते शब्दे शब्दत्वादेः समवायात् । विशेषणतया समवायाभावयोर्ग्रहः । तथाहि । विशेषणता द्विविधा । इन्द्रियविशेषणतेन्द्रियसंबद्धविशेषणता चेति । तत्रेन्द्रियविशेषणतया शब्दसमवायस्य शब्दाभावस्य च ग्रहः । इह शब्दसमवायोऽस्तीह शब्दो नास्तीति श्रोत्रेन्द्रिये शब्दसमवायस्य शब्दाभावस्य च विशेषणत्वात् । इन्द्रियसंबद्धविशेषणतया घटादिसमवायस्य घटाभावस्य च ग्रहः । इह कपाले घटसमवायोऽस्तीह भूतले घटो नास्तीति चक्षुरादिसंयुक्ते कपाले घटसमवायस्य भूतले च घटाभावस्य विशेषणत्वात् । समवायस्य प्रत्यक्षवर्णनं न्यायमतेन । वैशेषिकमते तु समवायोऽतीन्द्रियः ॥

अलौकिकप्रत्यक्षे हेतुः संनिकर्षस्त्रिविधः । सामान्यलक्षणो ज्ञानलक्षणो योगजधर्मश्चेति[41] । एतत्त्रितयसंनिकर्षः षडिन्द्रियसहकारीति संप्रदायविदः । मनस एव सहकारीति शूलपाणिमिश्राः[b] । तत्र सामान्यं ज्ञायमानमेव स्वाश्रयाणां संनिकर्षः । ज्ञायमानघटत्वसंनिकर्षेण[c] घटा इत्याकारकं सकलघटानां प्रत्यक्षं मनसा[d] जन्यते । ज्ञानलक्षणसंनिकर्षेण तु तद्विषयीभूततत्तत्पदार्थानां प्रत्यक्षं मनसा[e] जन्यते । कथमन्यथा कविकाव्यमूलभूततत्तत्पदार्थसंसर्गज्ञानं । एवं सुरभि चन्दनमिति चाक्षुषे सौरभस्यापि भानं ज्ञानसंनिकर्षेण । सौरभस्य चक्षुरयोग्यत्वेन चक्षुःसंयुक्तचन्दनसमवायस्य तत्र सत्त्वेऽप्यप्रयोजकत्वात् । योगजधर्मसंनिकर्षेण च योगिनां वस्तुमात्रस्य प्रत्यक्षं मनसा[f] जन्यते ॥

तच्च[42] प्रत्यक्षं षड्विधं घ्राणरसनचक्षुःश्रोत्रत्वङ्मनोभेदात् । गन्धप्र-

---

a. D. omits शब्दे. b. C. omits एतत्त्रितय to मिश्राः, and F. reads एतत्त्रितयसंनिकर्षो मनस एव सहकारी. c. F. B. ज्ञायमानघटत्वेन संनिकर्षेण घट इ॰ d. A. C. D. omit मनसा. e. A. C. D. omit मनसा. f. A. C. D. omit मनसा.

त्यक्षासाधारणं कारणं घ्राणम् । रसप्रत्यक्षासाधारणं कारणं रसनम् । रूपप्रत्यक्षासाधारणं कारणं चक्षुः । शब्दप्रत्यक्षासाधारणं कारणं श्रोत्रम् । सुखादिप्रत्यक्षासाधारणं कारणं मनः । घ्राणादिलक्षणेऽसाधारणपद[a]मात्मादिवारणाय । गन्धादिप्रत्यक्षं च चन्दने सौरभं गुडे मधुरो रसो घटे रक्तो वर्णो जले शीतस्पर्शो वने सिंहनादो मयि सुखमित्याद्याकारकम् । तत्र[b]करणीभूतस्य घ्राणादेर्व्यापारो घ्राणादिमनःसंयोगो मनसस्त्वात्ममनः[c]संयोगः । न च [43]घ्राणादेर्गन्धादिप्रत्यक्षजनकत्वे परमाणुमष्यादिगन्धादेरपि प्रत्यक्षं स्यादिति वाच्यम् । यतो गन्धादयो महत्त्वसमानाधिकरणोद्भूता एव घ्राणादियोग्याः । परमाणुगन्धादयश्च न महत्त्वसमानाधिकरणाः । मष्यादिगन्धादयश्च नोद्भूता इति न तत्प्रत्यक्षम् । एवं भेर्यादिदेश[d]उत्पन्नशब्दाद्वीचीतरंगन्यायेन कदम्बगोलकन्यायेन वा श्रोत्रदेश उत्पन्नः शब्दः श्रोत्रयोग्यस्तस्यैव [e]श्रोत्रसंबन्धसंभवात् । अत्र घ्राणरसनश्रोत्राणि द्रव्याग्राहकाणि चक्षुस्त्वङ्मनांसि द्रव्यग्राहकाणि । महत्त्वोद्भूतरूपवद्द्रव्यं चक्षुषो योग्यम् । एवं महत्त्वोद्भूतस्पर्शवद्द्रव्यं त्वचो योग्यम् । अत एव परमाणुवायुपिशाचादयश्चक्षुषा न गृह्यन्ते परमाणौ महत्त्वाभावाद्वायौ रूपाभावात्पिशाचादावुद्भूतरूपाभावात् । अत एव प्रभापि त्वचा न गृह्यते तत्रोद्भूतस्पर्शाभावात् । एवं योग्यद्रव्यसमवेता द्रव्यत्वादिसामान्यकर्मसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वस्नेहवेगास्तत्समवायस्तदभावश्च चक्षुषस्त्वचोऽपि योग्याः । जीवात्मलक्षणं द्रव्यं मनोयोग्यं तत्समवेता आत्मत्वादिसामान्यबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नास्तत्समवायस्तदभावश्च मनोयोग्याः । येनेन्द्रियेण यद्गृह्यते तेनेन्द्रियेण तद्गतं सामान्यं तत्समवायस्तदभावश्च गृह्यत इति नियमादिति व्याख्यातं प्रत्यक्षम् ॥

अथानुमानं निरूप्यते ।—अनुमितिक[f]रणमनुमानम्[44] । तच्च धूमो वह्निव्याप्य इति व्याप्तिज्ञानम्[g] । वह्निव्याप्यधूमवानयमिति तृतीयलिङ्गपरामर्शो व्यापारः । तृतीयत्वं कथमस्येति चेदुच्यते । महानसादौ दृष्टान्ते

a. C. E. F. °पदं मनोवारणाय । मनोलक्षणे च तत्पदमात्मवारणाय ।. b. B. तत्तत्करणी°. A. तत्र कारणी°. c. A. B. C. omit मनः. d. C. omits भेर्यादिदेश उत्पन्नशब्दात्. e. C. omits this clause. f. C. अनुमितिप्रमा°. g. C. E. read very differently here.

वह्निधूमयोर्भूयः सहचारदर्शनाद्व्याप्यत्वेन धूमज्ञानं प्रथमम् । ततः पर्वतादौ धूमं दृष्ट्वा व्याप्यत्वेन तत्स्मरणं द्वितीयम् । ततस्तत्रैव व्याप्यत्वेन धूमस्य परामर्शो वह्निव्याप्यधूमवानयमित्येवं रूपो जायत इति तृतीयत्वं तस्येति बोध्यम् । लिङ्गज्ञानजन्यं लिङ्गिज्ञानमनुमितिः । यथा पर्वतादौ धूमज्ञानानन्तरं पर्वतो वह्निमानिति ज्ञानम् । व्याप्तिपक्षधर्मतावल्लिङ्गम् । [45]ननु केयं व्याप्तिरिति चेदुच्यते । अव्यभिचरितसाध्य[a]सामानाधिकरण्यं व्याप्तिः । अस्ति चेदं पर्वतो वह्निमान्धूमवत्त्वादित्यादिसद्धेतौ यत्र यत्र धूमस्तत्र तत्र[b] वह्निरिति नियमस्य [c]सत्त्वात् । नास्ति चेदं पर्वतो धूमवान्वह्निमत्त्वादित्याद्यसद्धेतौ यत्र यत्र वह्निस्तत्र तत्र धूम इति नियमस्यासत्त्वात् । तप्तायः[d]पिण्डे वह्निस[e]त्त्वेऽपि धूमासत्त्वात् । व्यभिचारज्ञानविरहसहकृतं हेतुसाध्यसहचारदर्शनं व्याप्तिग्राहकम् । कथमेतदिति चेदित्थम्[f] । हेतोः साध्याभाववद्वृत्तित्वं व्यभिचारस्तज्ज्ञाने सति व्याप्तिग्रहाभावात्तदभावस्तत्र कारणम् । हेतुसाध्यसहचारदर्शनं त्वन्वयव्यतिरेकाभ्यां तत्र कारणम् । का पुनः पक्षधर्मता[46] । पक्षाश्रयवृत्तित्वं पक्षधर्मता पक्षता[g]चानुमित्साविरहविशिष्टसाध्यनिश्चयाभावः । अस्ति चेदं पर्वतादौ पक्षेऽनुमित्साविरहविशिष्टसाध्यनिश्चयस्य [h]तत्राभावात्पर्वतादौ साध्यनिश्चये सत्यपि सत्यां चानुमित्सायां पर्वतो वह्निमान्धूमादित्यनुमानसंभवात् । तत्र पक्षतासंपत्तयेऽनुमित्साविरहविशिष्टत्वं[i]साध्यनिश्चयविशेषणम् । तथा चानुमित्साविरहविशिष्टसाध्यनिश्चयस्य तत्राभावात्पक्षता ॥

तच्चानुमानं त्रिविधम्[47] । केवलान्वयि केवलव्यतिरेक्यन्वयव्यतिरेकि चेति । यत्रान्वयव्याप्तिरेवास्ति तत्केवलान्वयि । यथा घटोऽभिधेयः प्रमेयत्वादिति । अत्र घटः पक्षस्तस्याभिधेयत्वं साध्यम् । प्रमेयत्वं हेतुः । तस्मिन्यत्र यत्र प्रमेयत्वं तत्र तत्राभिधेयत्वं यथा पट[j] इत्यन्वयव्याप्तिरेवास्ति । न तु यत्र यत्र साध्याभावस्तत्र तत्र हेत्वभाव इति व्यतिरेकव्याप्तिः । अभिधेयस्य प्रमेयत्वस्य च सर्वत्र [k]सत्त्वात्साध्याभावादेरेवाप्रसिद्धत्वात् । यत्र व्यतिरेकव्याप्तिरेवास्ति तत्केवलव्यतिरेकि । यथा

a. A. B. om. साध्य. b. D. reads this clause after °इत्याद्यसद्धेतौ. c. A. B. नियमत्वात्. d. A. तथायः. e. A. B. मत्त्वे. f. D. उच्यते. g. A. B. C. om. चा. h. A. °स्येतरत्रा°. i. A. B. C. E. °विशिष्टसाध्य°. j. A. घट. k. C. E. om. अभिधेयस्य......सत्त्वात्.

जीवच्छरीरं[a] सात्मकं प्राणादिमत्त्वादित्यादि । अत्र जीवच्छरीरं पक्षस्तस्य सात्मकत्वं साध्यं प्राणादिमत्त्वं हेतुस्तस्मिन्यत्र यत्र सात्मकत्वाभावस्तत्र तत्र प्राणादिमत्त्वाभावो यथा घटादाविति व्यतिरेकव्याप्तिरेवास्ति । न तु यत्र यत्र प्राणादिमत्त्वं तत्र सात्मकत्वमित्यन्वयव्याप्तिर्दृष्टान्ताभावाज्जीवच्छरीरमात्रस्य पक्षीकरणात् । अन्यत्र च हेतुसाध्ययोरेवासत्त्वात्[b] । यत्रान्वयव्याप्तिर्व्यतिरेकव्याप्तिश्च निगद्यते तदन्वयव्यतिरेकि । यथा पर्वतो वह्निमान्धूमादित्यादि । अत्र च पर्वतः पक्षस्तस्य वह्निमत्त्वं साध्यं धूमादिति हेतुस्तस्मिन् यत्र यत्र धूमस्तत्र तत्र वह्निर्यथा महानसादाविइत्यन्वयव्याप्तिः । एवं[c] यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभावो यथा जलमहाह्रदादाविति व्यतिरेकव्याप्तिश्चास्ति । अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते । साध्याभावोऽन्यथा[d] व्याप्यो व्यापकः साधनात्ययः । व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परम् । एवं परीक्षिता व्याप्तिः स्फुटीभवति तत्त्वत इति । त्रयाणां मध्ये योऽन्वयव्यतिरेकी स पञ्चरूपोपपन्न[43] एव स्वसाध्यं साधयति । तानि पञ्चरूपाणि । पक्षधर्मत्वम् । सपक्षे सत्त्वम् । विपक्षाद्व्यावृत्तिः । अबाधितविषयत्वम् । असत्प्रतिपक्षत्वं चेति । पक्षताश्रयवृत्तित्वं पक्षधर्मत्वम् । निश्चितसाध्यवान्सपक्षः । तत्र विद्यमानत्वं सपक्षसत्त्वम् । निश्चितसाध्याभाववान्विपक्षः । तत्राविद्यमानत्वं विपक्षाद्व्यावृत्तिः[e] । प्रमाणान्तरेणाप्रमितसाध्याभावकत्व[f]मबाधितविषयत्वम् । साध्याभावसाधकहेत्वन्तरशून्यत्वमसत्प्रतिपक्षत्वम् । एतानि पञ्चरूपाणि वह्निसाधकधूमादावन्वयव्यतिरेकिणि विद्यन्ते । केवलान्वयिनि विपक्षाद्व्यावृत्तिर्नास्ति विपक्षाप्रसिद्धेः । केवलव्यतिरेकिणि सपक्षे सत्त्वं नास्ति सपक्षासिद्धेः ॥

त्रिविधमप्यनुमानं द्विविधम् । स्वार्थं परार्थं चेति । स्वस्यैवानुमितिहेतुः स्वार्थम् । स्वयं धूमादग्निमनुमाय परं बोधयितुं पञ्चावयवोपेतमनुमानवाक्यं प्रयुङ्क्ते तत्परार्थम्[g] । पञ्चावयवास्तु प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि । तत्र पक्षे साध्यनिर्देशः प्रतिज्ञा । यथा पर्वतो वह्निमा-

[a] A. जीवशरीरम् for जीवच्छरीरम् throughout. [b] D. omits from जीवच्छरीर° to सत्त्वात्; and C. from अन्यत्र° to सत्त्वात्. [c] A. om. एवम्. [d] A. B. अन्यत्र. [e] A. °वृत्तित्वं प्रमाणा°. [f] A. °भावत्वम्°. [g] D. परार्थानुमानम्.

निति। पञ्चम्यन्तं हेतुप्रतिपादकं वाक्यं हेत्ववयवः। यथा धूमादिति। व्याप्तिप्रतिपादकं वचनमुदाहरणम्। यथा यो यो धूमवान्स स वह्निमान् यथा महानस इति। व्याप्तिविशिष्टस्य हेतोः पक्षधर्मताप्रतिपादकं वचनमुपनयः। यथा वह्निव्याप्यधूमवांश्चायमिति। अबाधितत्वासत्प्रतिपक्षितत्वतात्पर्यकं वाक्यं निगमनं यथा तस्माद्वह्निमानिति। तथा[a] चायमित्युपनयस्य तस्मात्तथेति निगमनस्य शरीरमिति प्राञ्चः। व्यतिरेकिणि प्रतिज्ञाहेतू तुल्यावेवोदाहरणोपनयनिगमनानि तु भिद्यन्ते। यथा जीवच्छरीरं सात्मकं प्राणादिमत्त्वादित्यत्र यत्सात्मकं न भवति तत्प्राणादिमन्न भवति यथा घटः। न चेदं जीवच्छरीरं प्राणादिमन्न भवति तस्मान्न तथेति॥

अथ हेत्वाभासाः—अनुमितितत्करणान्यतरप्रतिबन्धकज्ञानविषयधर्मो हेत्वाभासत्वोपाधि[b]स्तद्वान्हेत्वाभासः[49]। ते चानैकान्तिकविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च। तत्र सव्यभिचारोनैकान्तिकः। स[50] त्रिविधः साधारणोऽसाधारणोऽनुपसंहारी चेति। तत्र सपक्षविपक्षवृत्तिः साधारणः। यथा पर्वतो धूमवान्वह्नेरिति। वह्निर्हि सपक्षे महानसे विपक्षे तप्तायःपिण्डे च वर्ततेऽतः साधारणः। एतज्ज्ञानं च विपक्षवृत्तित्वरूपव्यभिचारविषयकत्वाद्व्यभिचारज्ञानविधया[c] व्याप्तिग्रहे प्रतिबन्धकम्। व्यभिचारज्ञाने सति व्याप्तिग्रहानुदयस्य सुप्रसिद्धत्वात्। सपक्षविपक्षव्यावृत्तत्वे सति पक्षवृत्तिरसाधारणः। यथा शब्दो नित्यः शब्दत्वादिति। शब्दत्वं हि सपक्षाद्गगनादेर्विपक्षाच्च घटादेर्व्यावृत्तं पक्षे शब्दे च वर्तत इत्यसाधारणम्। एतज्ज्ञानं च साक्षादनुमितिप्रतिबन्धकम्। कथमिति चेदित्थम्। शब्दत्वं हि नान्वयी हेतुर्दृष्टान्ताभावात्। किं तु व्यतिरेकी। तथा च यो हेतुर्यद्धर्मवतो[d] व्यावृत्तः स स्वाश्रये तद्धर्माभावं[e] साधयति। यथा धूमो वह्न्यभाववतो जलह्रदादेर्व्यावृत्तः स्वाश्रये पर्वतादौ वह्न्यभावाभावं वह्निं[f] साधयति। तथा शब्दत्वं नित्यत्ववतो गगनादेः सपक्षाद्व्यावृत्तमिति स्वाश्रये शब्दे नित्यत्वाभावमनित्यत्वं साधयेत्। एवं नित्यत्वाभाववतो घटादेर्विपक्षाद्व्यावृत्तमिति स्वाश्रये

a. A. यथा. b. E. F. °तोपाधिः. c. C. विषयतया. d. A, B. D. यो यद्वतो व्यावृत्तः. e. A. B. D. तदभावम्. f. A. B. D. om. वह्निम्.

शब्दे नित्यत्वाभावाभावं[a] नित्यत्वमपि साधयेत् । न चैकत्र शब्दे नित्यत्वानित्यत्वयोः संभवस्तयोर्विरोधात्[b] । तस्माच्छब्दत्वेऽसाधारणत्वज्ञाने सति न साध्यानुमितिरिति । वस्तुमात्रपक्षकोऽनुपसंहारी । यथा सर्वं नित्यं प्रमेयत्वादिति । अत्र सर्वस्यैव पक्षत्वात्प्रमेयत्वं हेतुरनुपसंहारी । एतज्ज्ञानमपि व्याप्तिग्रहे प्रतिबन्धकम् । सर्वस्य पक्षत्वे व्याप्तिग्राहक[c]सहचारदर्शनस्थलाभावेन सहचारनिश्चयाभावे सति व्याप्तेरनिश्चयात् । साध्याभावव्याप्तो हेतुर्विरुद्धः[51] । यथायं गौरश्वत्वादिति । अत्र च यत्र यत्राश्वत्वं तत्र तत्र गोत्वाभाव इति साध्याभावव्याप्तेः सत्त्वादश्वत्वं हेतुर्विरुद्धः । एतज्ज्ञानं च साक्षादनुमितिप्रतिबन्धकं [d]पक्षे गोत्वाभावव्या[e]प्याश्वत्ववत्ताज्ञाने सति गोत्वनिश्चयासंभवात् । साध्याभावसाधकहेत्वन्तरं प्रतिपक्षः । तद्वान्सप्रतिपक्षः । यथा पर्वतो वह्निमान्धूमान्महानसवत् । स वह्न्यभाववान्पाषाणमयत्वात्कुड्यवदिति । अत्र च द्वयोरपि हेत्वोः परस्परसाध्याभावसाधकत्वान्मिथः सत्प्रतिपक्षत्वम् । एतज्ज्ञानं च साक्षादनुमितिप्रतिबन्धकम् । वह्निव्याप्यधूमवान्वह्न्यभावव्याप्य[f]पाषाणमयत्ववांश्च पर्वत इति द्विविधपरामर्शे सत्येकस्मादप्यनुमितेरभावात्परस्परं प्रतिबन्धात् । परामर्शप्रतिबन्धकज्ञानविषयधर्मोऽसिद्धिस्तद्वानसिद्धः[52] । स त्रिविधः । आश्रयासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धश्चेति । तत्र पक्षतावच्छेदकाभाववत्पक्षक आश्रयासिद्धः । यथा गगनारविन्दं सुरभ्यरविन्दत्वात्सरोजारविन्दवदिति । अत्र चारविन्दे पक्षे गगनीयत्वं पक्षतावच्छेदकं[g] नास्तीत्यरविन्दत्वं हेतुराश्रयासिद्धः । एतज्ज्ञानं परामर्शप्रतिबन्धकम् । अरविन्दे गगनीयत्वं नास्तीति ज्ञाने सुरभित्वव्याप्यारविन्दत्ववद्गगनारविन्दमिति परामर्शासंभवात् । एतस्यारविन्दे गगनीय[h]त्वसंबन्धावगाहित्वात् । पक्षनिष्ठाभावप्रतियोगी स्वरूपासिद्धः । यथा ह्रदो द्रव्यं धूमादिति । अत्र च पक्षे दे धूमस्याभावोऽस्तीति धूमो हेतुः स्वरूपासिद्धः । एतज्ज्ञानमपि परा-

a. A. नित्यत्वाभावम्. B. अनित्यत्वाभावम्. D. om. एवं नित्यत्वाभाववतो घटादे° to नित्यत्वमपि साधयेत्. E. C. साध्याभावाभावम्. b. C. E. प्रतियोग्यभावयोरेकत्र विरोधात्. c. C. E. निश्चायकं. d. A. B. D. F. om. पक्षे. e. A. D. F. व्याप्त्या. f. A. B. D. F. om. पाषाणमयत्व. g. A. °वच्छेदके. h. A. °नीयत्वहेत्वसं° D. °नीयसं°.

मर्शप्रतिबन्धकम्। ह्रदे धूमो नास्तीति ज्ञाने सति द्रव्यत्वव्याप्यधूमवान्ह्रद इति परामर्शासंभवात्। एतस्य ह्रदे धूमसंबन्धावगाहित्वात्। व्याप्यतावच्छेदकाभाववान्हेतुर्व्याप्यत्वासिद्धः। यथा पर्वतो वह्निमान्काञ्चनमयधूमादिति। अत्र च धूमे व्याप्यत्वावच्छेदकत्वेनाभिमतं काञ्चनमयत्वं नास्तीति धूमो हेतुर्व्याप्यत्वासिद्धः। एतज्ज्ञानमपि परामर्शप्रतिबन्धकम्। धूमे काञ्चनमयत्वं नास्तीति ज्ञाने सति वह्निव्याप्यकाञ्चनमयधूमवान्पर्वत इति परामर्शासंभवात्। एतस्य धूमे काञ्चनमयत्वसंबन्धावगाहित्वात्। साध्याभाववत्पक्षको बाधितः[55]। यथा वह्निरनुष्णः पदार्थत्वाज्जलवदिति। अत्र च वन्हौ पक्षेऽनुष्णत्वाभावस्योष्णत्वस्य त्वगिन्द्रियेण निश्चयात्पदार्थत्वं हेतुर्बाधितः। एतज्ज्ञानं साक्षादनुमितिप्रतिबन्धकम्। वह्नावनुष्णत्वं नास्तीति ज्ञाने सति वह्निरनुष्ण इत्यनुमितेरसंभवात्तदभावलौकि[a]कनिर्णयस्य तद्वत्ताज्ञाने प्रतिबन्धकत्वात्। इति हेत्वाभासाः॥

ननूपाधेरपि हेतुदोषत्वात्सोपाधिकोऽपि हेत्वाभासोऽस्तीति कथं पञ्चैव त इति चेन्न। व्यभिचारादिज्ञानस्येवोपाधिज्ञानस्यानुमितितत्करणान्यतरप्रतिबन्धकताभावेनोपाधेर्हेतुदोषत्वाभावात्। कथं तर्हि वाद्यनुमान उपाधिरुपन्यस्यत इति चेद्व्यभिचारज्ञानप्रयोजकत्वेन तत्र तदुपन्यासः। अथ कोऽयमुपाधिरिति[54] चेदुच्यते। साध्यव्यापकत्वे सति साधनाव्यापक[b] उपाधिः। यथा धूमवान्वह्नेरित्यत्रार्द्रेन्धनम्। भवति च तत्साध्यस्य धूमस्य व्यापकं यत्र यत्र धूमस्तत्र तत्रार्द्रेन्धनमिति सत्त्वात्[c]। भवति च साधनस्य[d] वह्नेरव्यापकं यत्र वह्निस्तत्रार्द्रेन्धनमित्यसत्त्वात्। तप्तायःपिण्डे वह्निसत्त्वेऽप्यार्द्रेन्धनाभावात्। एवं यागीया पशुहिंसाधर्मसाधनं हिंसात्वात्क्रतुबाह्यहिंसावदित्यत्र निषिद्धत्वमुपाधिः। भवति च तदधर्मसाधनस्य[e] साध्यस्य व्यापकं यत्र यत्राधर्मसाधनत्वं तत्र तत्र निषिद्धत्वमिति सत्त्वात्साधनत्वस्य हिंसात्वस्याव्यापकं यत्र यत्र हिंसात्वं तत्र तत्र निषिद्धत्वमित्यसत्त्वात्। पक्षीकृतहिंसायां हिंसात्वसत्त्वेऽपि निषिद्धत्वस्यासत्त्वात्[f]। एवं गर्भस्थो मित्रातनयः श्यामो

---

a. E. om. लौकिक. b. A. °कत्वमुपाधिः. c. E. omits from भवति च तत्साध्यस्य &c. to इति सत्त्वात्. d. E. साधनवह्नेः. e. A. °त्वम्। साध्य°. D. °न त्वसाध्य°. f. E. om. from साधनत्वस्य &c. to निषिद्धत्वस्यासत्त्वात्.

मित्रातनयत्वाद्दृश्यमानमित्रातनयषट्कवदित्यत्र शाकपाकजत्वमुपाधिः । न च श्यामत्वस्य काकादौ सत्त्वे शाकपाकजत्वाभावात्साध्याव्यापकत्वं काकादिव्यावृत्तश्यामत्वस्यैवात्र साध्यत्वात्[b] । इत्यनुमाननिरूपणम् ॥

अथोपमानं निरूप्यते ।[c]—तत्रोपमितिकरणमुपमानम् । तच्च सादृश्यज्ञानात्मकम् । उपमितित्वजातिमत्युपमितिः । कथमियमुत्पद्यत इति चेदुच्यते । गवयमजानन्कश्चिन्नागरिकः कंचिद्वनेचरं कीदृशो गवयपदवाच्य इति पृच्छति । ततस्तेनोक्तो गोसदृशो गवयपदवाच्य इत्युत्तरितः स कदाचिद्वनं गतो गोसदृशं पिण्डं पश्यन्प्रागुक्तातिदेशवाक्यार्थं स्मृत्वासौ गवयपदवाच्य इति प्रतिपद्यते सोपमितिः । अत्र गोसादृश्यज्ञानं करणम्। अतिदेशवाक्यार्थस्मरणं व्यापारः । इत्युपमाननिरूपणम् ॥

अथ शब्दो निरूप्यते ।—शब्दप्रमाकरणज्ञानविषयः शब्दः[55] । यथा नदीतीरे पञ्च फलानि सन्तीत्यादि । वाक्यार्थगोचरं यथार्थज्ञानं शाब्दप्रमा । अत्र[d] पदज्ञानं करणम्। पदजन्यपदार्थोपस्थितिर्व्यापारः । पदोपस्थितानां मिथः संसर्गो वाक्यार्थः । पदसमूहो वाक्यम् । अर्थवाचकं[e] पदम् । तद्विविधं मुख्यगौणभेदात्[f] । यच्छक्तिवृत्त्या यमर्थमुपस्थापयति तत्तस्मिन्नर्थे मुख्यम् । यथा गोघटादिव्यक्त्युपस्थापकं गोघटादिपदम् । अस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारकोऽनादिसंकेतः शक्तिः । यल्लक्षणावृत्त्या यमर्थमुपस्थापयति तत्तस्मिन्नर्थे गौणं लाक्षणिकमित्युच्यते । यथा गङ्गायां घोष इत्यत्र तीरोपस्थापकं गङ्गापदम् । शक्यसंबन्धो लक्षणा । यथा गङ्गापदशक्यप्रवहज्जलौघस्य तीरे संयोगसंबन्धो गङ्गापदलक्षणा । तस्य च शब्दस्याकाङ्क्षायोग्यतासंनिधयः सहकारिणः । यस्य पदस्य येन पदेन विनान्वयानुभवजनकत्वं नास्ति तस्य पदस्य तेन पदेन समभिव्याहार[g] आकाङ्क्षा[56] । घटमानयेत्यादौ कारकपदस्य क्रियापदेन

a. E. नरविशिष्टमित्रा°. b. B. E. om. from न च श्यामत्वस्य &c. to साध्यत्वात्. c. E. and C. read quite differently the whole subject of उपमान. d. C. omits from अत्र पद to गङ्गापदलक्षणा and agrees with E. e. E. प्रतिपादकम्. E. शक्तं लाक्षणिकम् । गङ्गायां घोष इत्यादौ गङ्गापदं तीरे लाक्षणिकम् । गङ्गापदशक्यप्रवहत्°. g. A. D. °हारादा°.

विना घटकर्मकमित्यन्वयानुभवजनकत्वाभावात्कारकपदस्य क्रियापदेन सहाकाङ्क्षा। एवं क्रियापदस्य कारकपदेनापि सह बोध्या। अत एव गौरश्वः पुरुषो हस्तीत्यादौ नान्वयबोध आकाङ्क्षाविरहात्। एकपदार्थेऽपरपदार्थसंसर्गो योग्यता। यथा पयसा सिञ्चतीत्यादौ पयःपदार्थे सेकसंसर्गस्य कार्यकारणभावलक्षणस्य सत्त्वाद्योग्यता। अत एव वह्निना सिञ्चतीत्यादौ नान्वयबोधो योग्यताविरहात्। पदानामव्यवधानं संनिधिः। यथा गामानयेत्यादौ पदानामविलम्बेनोच्चारणात्संनिधिः। अत एवैकैकशः प्रहरे प्रहरेऽसहोच्चारिते गामानयेत्यादौ नान्वयबोधः संनिधेरभावात्। सोऽयं शब्दस्त्रिविधो विधिनिषेधार्थवादभेदात्। तत्र प्रवृत्तिपरं वाक्यं विधिः[a]। यथा ज्योतिष्टोमेन स्वर्गकामो यजेतौदनकामस्तण्डुलं पचेतेत्यादि। ज्योतिष्टोमनामको यागः स्वर्गरूपेष्टसाधनं तण्डुलकर्मकपाक ओदनरूपेष्टसाधनमित्युभयवाक्यार्थः। यजेत पचेतेत्यादिविधिप्रत्ययेनेष्टसाधनत्वोपस्थापनात्। निवृत्तिपरं[b] वाक्यं निषेधः। यथा न कलञ्जं भक्षयेदिति। कलञ्जभक्षणं नेष्टविशेषसाधनमित्यर्थः। इष्टविशेषश्चात्र पापानुत्पत्तिरेव। तथैव वाक्यतात्पर्यात्। विधिनिषेधभिन्नः शब्दोऽर्थवादः। यथादित्यो यूप[c] इत्यादिः। स चायं शब्दो लोके वेदे च समानः। इयांस्तु विशेषः किंचिदेव लौकिकं वाक्यं प्रमाणं यदाप्तोक्तं वेदवाक्यं तु सर्वमपि प्रमाणं परमाप्तेन भगवता कृतत्वात्। इति शब्दनिरूपणम्॥

अर्थापत्तिस्तु[d] न प्रमाणान्तरम्। पीनो देवदत्तो दिवा न भुङ्क्त इति दृष्टे श्रुते वा दिवाभोजिनो रात्रिभोजनमन्तरेण पीनत्वमनुपपन्नमिति ज्ञानानन्तरं देवदत्तो रात्रौ भुङ्क्त इति निर्णीयते तस्य व्यतिरेकिसाध्यत्वात्। तथा हि। देवदत्तो रात्रौ भुङ्क्ते दिवाभुञ्जानत्वे सति पीनत्वात्। यस्तु रात्रौ न भुङ्क्ते स दिवाभुञ्जानत्वे सति पीनोऽपि न भवति। यथा दिवा रात्रौ चाभोजीति। अर्थापत्तिरित्यपि व्यतिरेकिण एव नामान्तरमिति। घटोपलब्धौ घटाभावाग्रहात्प्रतियोग्यनुपलब्धिरभावग्रहे[57] प्रत्य-

---

a. E. C. बलवदनिष्टाननुबन्धित्वेष्टसाधनत्वाभिधायकप्रत्ययघटितं वाक्यं विधिः and so forth. b. E. C. नञ्घटितं वा° and omitting from यथा न कलञ्जं, &c., to तात्पर्यात् read इह भूतले घटो नास्तीत्यादौ लौकिको निषेधः. c. A. B. add अग्निर्हिमस्य भेषजम्। वज्रहस्तः पुरंदरः. and E. reads for the whole यजमानः प्रस्तरः सिंहो माणवक इत्यादि. d. C. E omit from अर्थापत्तिस्तु, &c., to °आद्यजलज्ञानवदिति.

क्षस्यैव सहकारिणी नतु प्रमाणान्तरं प्रत्यक्षेणैवाभावग्रहोपपत्तेः । अन्यथेह घटो नास्तीति निर्णयानन्तरमिह घटाभावं साक्षात्करोमीति प्रतीत्यनुपपत्तेः ॥

प्रामाण्यं स्वतो ग्राह्यं परतो वेति विचार्यते[58a] । दूरात्प्रत्यक्षेण जलादिज्ञाने जाते तत्र स्वत एव यथार्थज्ञानत्व[b]रूपप्रामाण्यमवधार्य जलार्थी प्रवर्तते ज्ञानग्रहे[c] तद्गतप्रामाण्यस्यापि ग्रहात्प्रामाण्यस्य यावज्ज्ञानग्राहकग्राह्यत्वरूपस्वतस्त्वोपगमादिति मीमांसकास्तन्न । स्वत एव प्रामाण्यग्रहे ज्ञानग्रहानन्तरं कचिज्ज्ञातं मे जलज्ञानं प्रमा न वेति प्रामाण्यसंशयो न स्यान्निश्चिते संशयायोगात् । न च संशयस्थले ज्ञानग्रहोऽपि नास्तीति वाच्यम् । ज्ञानाग्रहे ज्ञानधर्मिकप्रामाण्यतदभावकोटिकसंशयानुपपत्तेः । संशये धर्मिज्ञानस्य हेतुत्वात् । न हि पुरोवर्तिन्युच्चैस्तरे धर्मिण्यज्ञातेऽयं स्थाणुः पुरुषो वेति संशयो भवति । तस्माज्ज्ञाने परत एव प्रामाण्यमवधार्यते । तथा हि । अनभ्यासदशापन्नजलादिज्ञाने जाते तत्र प्रामाण्यसंशये सत्यपि पुरुषः प्रवर्तते । ततो जलप्रतिलम्भे सति जातं मे[d] जलज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वात् । यत्प्रमा न भवति तत्समर्थप्रवृत्तिजनकं न भवति । यथा जलभ्रम इति व्यतिरेकेणानभ्यासदशापन्नज्ञानप्रामाण्यं निश्चीयत इति । अभ्यासदशापन्नजलादिज्ञानेषु प्रवृत्तेः पूर्वमप्यन्वयिना प्रामाण्यमवधार्यते । तत्रैव द्वितीयादिजलज्ञानं प्रमा समर्थप्रवृत्तिजनकजातीयत्वादाद्यजलज्ञानवदिति ॥

धर्मप्रभवं सुखम्[e] । अधर्मप्रभवं दुःखम् ॥ इच्छात्वसामान्यवतीच्छा । सापि द्वेधा फलविषयिणी तत्साधनविषयिणी चेति । सुखं दुःखाभावश्च फलम् । तदिच्छां प्रति [f]फलज्ञानमात्रं [g]कारणम् । साधनेच्छां प्रति तु फलसाधनताज्ञानं कारणम्[h] ॥ द्वेषत्वसामान्यवान्प्रज्वलनात्मको वा द्वेषः । स द्विविधः दुःखविषयस्तत्साधनविषयश्च । दुःखद्वेषं प्रति दुःखज्ञानमात्रं कारणम्[i] । साधनद्वेषं प्रति तु दुःखसाधनताज्ञानं कारणम्[j] ॥ प्रयत्नत्वसामान्यवानुत्साहरूपश्च प्रयत्नः । स त्रिविधः प्रवृत्तिनिवृत्तिजीव-

a. D. F. omit this clause. b. D. F. °त्वस्वरू°. c. D. °ग्रहे तु तद्गत°. d. A. ते. e. C. E. सुखसाधनभिन्नत्वे सति धर्म° and also दुःखसाधनभिन्नत्वे सति अधर्म°. f. C. E. उपायज्ञान°. g. C. E. करणम्. h. C. E. करणम्. i. j. C. E. करणम्.

नयोनिभेदात् । चिकीर्षाजन्यो यत्नः प्रवृत्तिः । द्वेष[a]साधनताज्ञानजन्यो यत्नो निवृत्तिः । श्वासप्रश्वासहेतुर्यत्नो जीवनयोनिः । स चातीन्द्रियः ॥ बुद्धीच्छाप्रयत्ना आत्ममात्रसमवेताः । तत्रेश्वरगता नित्या जीवगता अनित्याः[b] ॥ आद्यपतनासमवायिकारणं गुरुत्वम्[59] । तच्च भूजलमात्रवृत्ति ॥ आद्यस्यन्दनासमवायिकारणं द्रवत्वम् । तद्विविधं सांसिद्धिकं नैमित्तिकं चेति । अग्निसंयोगानपेक्ष्यं द्रवत्वं सांसिद्धिकम् । तज्जलमात्रवृत्ति । अग्निसंयोगापेक्ष्यं द्रवत्वं नैमित्तिकम् । तद्घृतादिरूपायां भुवि सुवर्णादिरूपे च तेजसि तदुभयत्रैव वह्निसंयोगाद्द्रवत्वोत्पत्तेः ॥ स्नेहत्वजातिमांश्चिक्कणतारूपः स्नेहः । स च जलमात्रवृत्तिः । चणकचूर्णादिव्य[c]ङ्गचः । घृततैलादौ स्नेहोपलम्भस्तु जलोपाधिकः ॥ गुरुत्वद्रवत्वस्नेहाः परमाणुगता नित्याः कार्यगता अनित्याः ॥ श्रोत्रग्राह्यो गुणः शब्दः । स त्रिविधः संयोगजो विभागजः शब्दजश्चेति । भेर्यामभिहन्यमानायां यः शब्दः स संयोगजः । तत्र भेर्याकाशसंयोगोऽसमवायिकारणम् । भेरीदण्डसंयोगो निमित्तकारणम् । वंश उत्पाट्यमाने यश्चटचटाशब्दः स विभागजः । तत्र वंशदलद्वयाकाशविभागोऽसमवायिकारणम् । वंशदलद्वयविभागो निमित्तकारणम् । वीचीतरंगन्यायेन कदम्बगोलकन्यायेन वा ये द्वितीयादयः शब्दास्ते शब्दजाः[60] । तत्रोत्तरोत्तरशब्दे पूर्वपूर्वशब्दोऽसमवायिकारणम् । अनुकूलवातादिकं निमित्तकारणम् । पुनरपि शब्दो द्विविधो वर्णात्मको ध्वनिश्च । ताल्वादिव्यापारप्रभवो वर्णात्मकः । मृदङ्गादिप्रभवो ध्वनिः । सर्वोऽपि शब्द आकाशमात्रसमवेतः ॥ जीवात्मसमवेतबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः शब्दश्च द्विक्षणावस्थायिनस्तृतीयक्षणे नश्यन्ति । योग्यविभुविशेषगुणानां स्वद्वितीयक्षणोत्पन्ननाश्यत्व[61]नियमात्[d] ॥ विहितक्रियासाध्यो धर्मो निषिद्धक्रियासाध्योऽधर्मः । एतौ जीवमात्रसमवेतौ भोगप्रायश्चित्ता[e]दिनाश्यौ च ॥ संस्कारत्वजातिमान्संस्कारः । स त्रिविधो वेगः स्थितिस्थापको भावना चेति । वेगत्वजातिमान्वेगः । स मूर्तद्रव्यमात्रसमवेतः । आश्रयपूर्वावस्थापादकः संस्कारः स्थितिस्थापकः । स पृथिव्यादिचतुष्टयवृत्तिः । आकृष्टतरुशाखादौ पुनस्त-

a. C. E. द्विष्ट. b. C. E. om. from बुद्धीच्छा, &c., to °अनित्याः. c. A. °द्रव्यपयोघृत°. d. C. E. F. omit from जीवात्मसमवेत, &c., to °त्वनियमात्. e. C. E. बुद्ध्यादयोऽष्टावात्ममात्रसमवेताः.

त्स्थानस्थितिं जनयति । इमौ द्वौ क्रियाजन्यौ स्वजन्यक्रियानाश्यौ च । पूर्वानुभवजन्यः स्मृतिहेतुः संस्कारो भावना । स जीवमात्रवृत्तिः । त्रिविधसंस्कारोऽनित्य एव । इति गुणनिरूपणम् ॥

ऊर्ध्वदेशसंयोगहेतुः कर्मोत्क्षेपणम् । अधोदेशसंयोगहेतुः कर्मापक्षेपणम् । स्वसंनिकृष्टसंयोगहेतुः कर्माकुञ्चनम् । स्वविप्रकृष्टसंयोगहेतुः कर्म प्रसारणम् । अन्यत्सर्वं कर्म गमनम् । पञ्चविधमपि कर्म मूर्तद्रव्यमात्रसमवेतमनित्यमेव । उत्तरसंयोगात्कदाचिदाश्रयनाशाच्च नश्यति । इति कर्मनिरूपणम् ॥

अधिकदेशवृत्ति सामान्यं परम् । यथा सत्ताया द्रव्यादित्रिवयवृत्तित्वेनेतरसामान्यापेक्षयाधिकदेशवृत्तित्वम् । अल्पदेशवृत्ति सामान्यमपरम् । यथा द्रव्यत्वगुणत्वकर्मत्वादि । सत्तापेक्षयाल्प[a]देशवृत्तित्वात् । पुनः सामान्यं द्विविधं जातिरूपमुपाधिरूपं च । साक्षात्संबद्धं सामान्यं जातिरूपम् । यथा सत्ताद्रव्यत्वादि । परंपरासंबद्धंसामान्यमुपाधिः[62] । यथा प्रमेयत्वज्ञेयत्वादिर्दण्डित्वकुण्डलित्वादिश्च । प्रमात्वमेव हि परंपरासंबन्धेन घटादिनिष्ठं प्रमेयत्वमित्यादि बोध्यम् । इति सामान्यनिरूपणम् ॥

नित्यद्रव्यवृत्तिविशेषाणां सामान्यस्य च विशेषतो विभागाभावात्सामान्यलक्षणमेव पूर्वोक्तमवसेयं । परंतु[b] विशेषानभ्युपगमे समानजातिगुणक्रियावतां परमाणूनां परस्परव्यावृत्तिबुद्धिर्न स्यात् । तत्रेष्टापत्तौ योगिनोपि तादृशपरमाणूनां ज्ञानसंकरः स्यादिति । एवं युतसिद्धयोः संयोग इवायुतसिद्धयोः समवायोवश्यः[c] । ययोर्द्वयोर्मध्ये एकमविनश्यदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ[63] । एतौ पञ्चविधाववयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेति । अवयव्यादयो ह्यविनश्यन्तोवयवाद्याश्रिता एवावतिष्ठन्ते । अवयवादिनाशानन्तरं विनश्यन्तस्तु क्षणमात्रं निराश्रिता एवावतिष्ठन्ते ।
अवयवादिनाशानन्तरं विनश्यन्तस्तु क्षणमात्रं निराश्रिता एवावतिष्ठन्ते ।
इति विशेषसमवाययोर्निरूपणम्[d] ॥

---

a. A. °यात्मदे°. b. C. E. substitute for the clause up to परंतु, विशेषश्च प्रतिव्यक्तिभिन्न एव । and add विशेषनिरूपणम् after ज्ञानसंकरः स्यादिति. c. E. breaks off at this point. d. C. omits from अवयव्यादयो to the end.

तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकोऽभावोऽन्योन्याभावः[64] । स च घटः पटो नेत्यादिप्रत्ययप्रसिद्धः । अन्योन्याभावभिन्नोऽभावः संसर्गाभावः । स त्रिविधः प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावश्चेति । उत्पत्तेः प्राक्समवायिकारणे कार्यस्य संसर्गाभावः प्रागभावः । स चेह कपाले घटो भविष्यतीति प्रत्ययप्रसिद्धः । उत्पत्तेरनन्तरं समवायिकारणे कार्यस्य संसर्गाभावः प्रध्वंसः । स चेह कपाले घटो ध्वस्त इति प्रत्ययप्रसिद्धः । त्रैकालिकः संसर्गाभावोऽत्यन्ताभावः । स चेह भूतले घटो नास्तीत्यादिप्रत्ययसिद्धः । एवमन्येषामत्रैवान्तर्भावः । यथान्धकारस्यालोकाभावे यत्रालोको नास्ति तत्रैवान्धकारव्यवहारात् ॥

लक्षणदोषाणामव्याप्त्यतिव्याप्त्यसंभवानां तु यथासंभवं हेत्वाभासेष्वन्तर्भावः[65] । लक्ष्यैकदेशे लक्षणस्यावर्तनमव्याप्तिः । यथा शिखासूत्रवान्ब्राह्मण इत्यस्य संन्यासिन्यव्याप्तिस्तस्य शिखासूत्रवत्त्वाभावात् । अलक्ष्ये लक्षणगमनमतिव्याप्तिः । यथा मनुष्यो ब्राह्मण इति लक्षणस्य शूद्रेऽतिव्याप्तिस्तस्यापि मनुष्यत्वात् । लक्ष्ये क्वापि लक्षणस्यावर्तनमसंभवः । यथा शुण्डदण्डवान्ब्राह्मण इति लक्षणस्यासंभवः कस्यापि ब्राह्मणस्य शुण्डदण्डाभावात् । एतद्दोषरहितं तल्लक्षणम् । विशुद्धमातापितृजन्यत्ववान्ब्राह्मण[a] इति । विशुद्धत्वं च षट्कर्माधिकारवत्त्वम् ॥

इयता प्रबन्धेन सर्वेषां पदार्थानामुद्देशलक्षणे कृते बालानुपयोगाच्च परीक्षा न कृता । लक्ष्यतावच्छेदकमात्रेण लक्ष्यसंकीर्तनमुद्देशः । असाधारणधर्मो लक्षणम् । उद्देशलक्षणयोरुपपत्त्यनुपपत्त्यन्यतरफलको विचारः परीक्षा । ननु निःप्रयोजन[b]मात्मेतरपदार्थनिरूपणं तज्जन्यपदार्थतत्त्वज्ञानस्य सुखदुःखाभाव[c]तत्साधनेतरत्वेन प्रयोजनत्वाभावादिति चेन्न । पदार्थतत्त्वज्ञानस्यात्मतत्त्वज्ञानद्वारा मोक्षसाधनत्वात् । आत्यन्तिकदुःखध्वंसो मोक्षः । स च [d]स्वसमानाधिकरणदुःख[e]प्रागभावासमानकालीनदुःखध्वंसः[66] । संसारकालीनदुःखध्वंसस्य मोक्षत्ववारणाय कालीनान्तं

a. A. °त्वाद्ब्राह्म°. b. A. D. °मेतत्°. c. D. °भाववत्°. d. D. om. स्व. e. D. दुःखासमान.

दुःखध्वंसाविशेषणम् । अस्मदीयदुःखसमानकालीनशुकमोक्षेऽव्याप्तिवारणाय [a]स्वसमानाधिकरणेतिदुःखविशेषणमिति सर्वं [b]शिवम् ॥

विद्वद्भास्करशर्मा यो बालव्युत्पत्तिसिद्धये ।
यथा कणादसिद्धान्तमकरोत्तर्ककौमुदीम् ॥
श्रीवासुदेवं सुरवैरिभङ्गं रमाधरालिङ्गितसुन्दराङ्गम् ।
पादाब्जसंभूतपवित्रगङ्गं नमामि तं वारितदोषसङ्गम्[c] ॥

इति लौगाक्षिभास्करशर्मविरचिता तर्ककौमुदी समाप्ता[d] ।

---

a. D. om. स्व. b. C. मोक्षश्च चरमदुःखध्वंसः । इदानींतनदुःखस्य चरमताभावान्न तद्ध्वंसेऽतिव्याप्तिः । चरमदुःखं च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखम् । स्वं चरमदुःखत्वेनाभिमतम् । तत्समानाधिकरणं दुःखं तत्पूर्वकालीनमेव । तत्प्रागभावासमानकालीनं चरमदुःखमिति मैत्रीयचरमदुःखस्यापि चैत्रीयदुःखप्रागभावसमानकालीनत्वादसंभव इत्यतः स्वसमानाधिकरणत्वं दुःखविशेषणम् । एवं च स्वसमानाधिकरणदुःख &c. as in the text. c. D. F. om. this verse. d. D. F. इति श्रीमन्महोपाध्यायलौगाक्षिरुद्रकवीन्द्रात्मजविद्वन्मुद्गलसूनुना भास्करेण रचिता तर्ककौमुदी संपूर्णा ॥

# NOTES.

1. तर्काणां कौमुदीव प्रकाशिकेति तर्ककौमुदी. तर्क is defined in the *Dipiká* of the *Tarkasamgraha* as तर्क्यन्ते प्रतिपाद्यन्त इति तर्का द्रव्यादिसप्त पदार्थाः. It may, hence, be described as that which is discussed and established, *i.e.*, results obtained by an analytical process of classification. Compare, "If we attempt to proceed further in the same path, that is, to analyse any further, the import of propositions, we find forced upon us, as a subject of previous consideration, the import of Names, .................... Now what we do, what passes in our mind, when we affirm or deny two names of one another, must depend on what they are names of, since it is with reference to that, and not to the names themselves that we make the affirmation or denial." Mill's Logic, Vol. I., p. 21.

2. अभिधेयत्वं पदार्थसामान्यलक्षणम्. A *padártha* is anything namable. These according to the author are seven. It may be noticed that all namable things are capable, at the outset, of being divided from the conception of existence they imply, into existences positive (भाव), and negative (अभाव): the भाव things again being divided into 6. अत्र सप्तमस्याभावत्वकथनादेव षण्णां भावत्वं प्राप्तं तेन भावत्वेन पृथगुपन्यासो न कृतः ॥ मुक्ता० ॥ *Kanáda*, according to whom the enumeration of substances is here given, appears originally to accept only six classes of objects, and not seven: तत्र द्रव्यगुणकर्मसामान्यविशेषसमवायाभावा इति षडेव पदार्थाः ॥ सर्व० सं० औ० द० ॥ There are, again others, who look upon शक्ति, सादृश्य, &c., as so many *padárthas*, but they are shown to be included in the heads already given. ननु कथमेत एव पदार्थाः शक्तिसादृश्यादीनामप्यतिरिक्तपदार्थत्वात्। तथाहि। मण्यादिसमवहितेन वह्निना दाहो न जन्यते तच्छून्येन तु जन्यते। तत्र मण्यादिना वह्नौ दाहानुकूला शक्तिर्नाश्यते। उत्तेजकेन मण्याद्यपसारणेन च जन्यत इति कल्प्यते। एवं सादृश्यमप्यतिरिक्तः पदार्थः। तद्धि न षट्सु भावेष्वन्तर्भवति सामान्येऽपि सत्त्वात्। यथा गोत्वं नित्यं तथाश्वत्वमिति सादृश्यप्रतीतेः। नाप्यभावे सत्त्वेन प्रतीयमानत्वादिति चेन्न। मण्याद्यभावविशिष्टवन्ह्यादेर्दाहादिकं प्रति स्वातन्त्र्येण मण्यभावादेरेव वा हेतुत्वं कल्प्यते। अनेनैव सामञ्जस्येऽनन्तशक्तितत्प्रागभावध्वंसकल्पनानौचित्यात्। न चोत्तेजके सति प्रतिबन्धकसद्भावेऽपि कथं दाह इति वाच्यम्। उत्तेजकाभावविशिष्टमण्यभावस्य कारणत्वात्। सादृश्यमपि न पदार्थान्तरम्। किन्तु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं। यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्त्वं मुखे

चन्द्रसादृश्यमिति ॥ मुक्ता॰ ॥ On the classification of namable things further compare, "A proposition is discourse which affirms or denies something of some other thing. This is one step. There must, it seems, be two things concerned in every act of belief. But what are these things?........If, therefore, we knew what all names signify, we should know everything which in the existing state of human knowledge, is capable of being made a subject of affirmation or denial, or being itself affirmed or denied of a subject...................We have now carried this survey far enough to be able to take an account of its results, and to exhibit an enumeration of all kinds of things which are capable of being made predicates, or of having anything predicated of them." Mill's Logic, Vol. I., p. 49. And further, "The necessity of an enumeration of existences, as the basis of logic, did not escape the attention of the schoolmen, and of their master, Aristotle........... The categories or predicaments.........were believed to be an enumeration of all things capable of being named." These are ten in number, and constitute "a mere catalogue of distinctions rudely marked out by the language of familiar life, with little or no attempt to penetrate, by philosophic analysis, to the rationale even of these common distinctions." Idem, p. 50. Another able writer, however, justifies this classification, in the words, "they seem to have been rather intended as a generalisation of predicates, an analysis of the final import of predication." Bain's Logic, Vol. I., p. 265.

3. Some include तमस् or darkness among the *dravyas*. It is said न च क्लृप्तद्रव्येष्वन्तर्भावात्कुतो दशमद्रव्यत्वमिति वाच्यम्। आकाशादिपञ्चकस्य नीरूपत्वाच्छायायाश्च नीरूपत्वान्न तेष्वन्तर्भावः। जलतेजसोः शीतोष्णस्पर्शविरहान्न तेष्वन्तर्भावः। तमसो निर्गन्धत्वान्न पृथिव्यामन्तर्भावः। तस्मात्तमसो दशमद्रव्यत्वं सिद्धमिति चेन्न। तेजोऽभावेनैवोपपत्तावतिरिक्तकल्पनायां मानाभावात्। न च विनिगमनाभावात्तेजस एव तमोऽभावरूपतास्त्विति वाच्यम्। तेजसोऽभावस्वरूपत्वे सर्वानुभूतोष्णस्पर्शाश्रयद्रव्यान्तरकल्पने गौरवात्। उष्णस्पर्शरूपगुणाश्रयतया तेजसो द्रव्यत्वं सिद्धम्। तमसि रूपप्रतीतिस्तु भ्रान्तिरेव। दीपापसरणक्रियाया एव तत्र भानात् ॥ न्या॰ बो॰ ॥ A *dravya* is defined as that which is the *substratum* of गुण, or क्रिया, or is capable of becoming the समवायिकारण of some effect. गुणवत्त्वं कर्मवत्त्वं समवायिकारणत्वं वा द्रव्यसामान्यलक्षणम् ॥ If a property or action can be predicated of a thing, that thing may be called a *dravya*. By saying that तमस् is dark, and that it can move, we can include it among the *dravyas*, but it could be shown to be included in mere अभाव, and not among the *dravyas*, as is done in the passage quoted above. *Vide* Note No. 8.

4. The *Gunas* enumerated in the *Vaisheshika sutras* are only 17 in number. रूपरसगन्धस्पर्शाः सङ्ख्यापरिमाणे पृथक्त्वं संयोगविभागौ परत्वापरत्व-बुद्धयः सुखदुःखेच्छाद्वेषप्रयत्नाश्च । The *Siddhânta chandrodaya* adds चेति वैशेषिकसूत्रस्थचकारस्यानुक्तसमुच्चायकत्वान्नात्र सूत्रविरोधः।

5. Some argue that several *karmas*, such as भ्रमण and रेचन, &c., are not taken into account, and therefore the classification is faulty; but the *Muktâvali* says भ्रमणं रेचनं स्पन्दनोर्ध्वज्वलनमेव च । तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ।

6. It is difficult to translate the word सामान्य into genus, inasmuch as the word does not exactly indicate a class higher than any other given class, as animal and man; but it rather refers to the *common characteristic* running through all the members of a class, *e.g.*, द्रव्यत्व in द्रव्य. परसामान्य refers, therefore, to the characteristic of the genus of a given class, and अपरसामान्य to the characteristic of the class itself, *e.g.* in the case of पृथिवी, द्रव्यत्व is the परसामान्य, with reference to which पृथिवीत्व is अपरसामान्य. Thus though पर and अपरसामान्य are merely relative conceptions, the *Naiyâyikas* recognise, as it were, an absolute or supreme *Sâmânya*, which they distinguish by the name सत्ता. This is supposed to reside in द्रव्य, गुण and कर्म only. सामान्यं द्विविधं प्रोक्तं परं चापरमेव च । द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥ परत्वमधिकदेशवृत्तित्वमपरत्वमल्पदेशवृत्तित्वं । सकलजात्यपेक्षया सत्ताया अधिकदेशवृत्तित्वात्परत्वं तदपेक्षया चान्यासां जातीनामपरत्वम् ॥मुक्ता०॥ This tenet is peculiar to the *Naiyâyikas*, for several other schools of philosophy have not only not recognised it, but some like the *Buddhists* have tried to actually refute it; *vide Sarvadarshana Samgraha* on the philosophy of the *Bauddhas*. The meaning of the word जाति may here be casually noticed in connection with the theory of सामान्य-जाति means the characteristic of a class, and is opposed to व्यक्ति or an individual of that class, *e.g.*, द्रव्यत्व and पृथिवी or तेजस्, &c. Among the *Padârthas* सामान्य, विशेष, समवाय and अभाव can have no जाति. As सामान्य is itself a जाति, it is impossible for it to have any fresh जाति, for such an arrangement will involve us in confusion *ad infinitum* (अनवस्था or °स्थिति). On this point compare, "If every general conception, instead of being the one in the many, were considered to be as many different conceptions as there are things to which it is applicable, there would be no such thing as general language." Mill's Logic, Vol. I., footnote, p. 204. विशेष or differentia always distinguish one thing from another. As thus no two *Vesheshas* can be alike, it is impossible to find out a *common likeness* in a group of

unlikes (*रूपहानिः). समवाय being a particular kind of relation must always be one, and as such must be *sui generes* (व्यक्तेरभेदः). It is a rule, as will be seen later on, that जाति and व्यक्ति are related to one another by the relation called समवाय. It will also be seen that अभाव is not related to anything by this kind of relation. Hence अभाव can have no जाति (असंबन्ध). *Udayanácharya* thus summarises the objections in the way of making a *Játi*: व्यक्तेरभेदः (1) तुल्यत्वं, (2) संकरो, (3) ऽथ-अनवस्थितिः (4) रूपहानिः (5) असंबन्धः (6) जातिबाधकसंग्रहः ॥ कुसु॰ ॥ We have seen instances of 4, 5, 6 and 1. तुल्यत्व stands in the way when all the different names we intend to generalise a जाति from, are but different expressions of one and the same idea, *e.g.*, शशी, चन्द्र, विधु, &c. संकर (परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशः ॥ सि॰ चं॰ ॥) or confusion arises from each of the confused *Játis* existing somewhere independently of the other (with which the first has got in confusion), and by both of them existing somewhere else entirely together, *e.g.* The *Murtadravyas* are पृथिवी, अप्, तेजस्, वायु and मनस्. The *Bhutadravyas* are the first four and आकाश. Now any one of the two *Játis*, मूर्तत्व or भूतत्व gets into confusion with the other; because, one of them, भूतत्व for example, exists in आकाश without the other—मूर्त्तत्व, which again is found in मनस् without its second—भूतत्व, both finally being seen together in द्रव्य. Hence भूतत्व or मूर्त्तत्व can be no जाति.

7. *Nityadravyas* are the five dravyas beginning with आकाश, and the *Paramánus* of the first four. These being without number, there can be no limit to the marks that distinguish them from one another. घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात्परस्परं भेदः। परमाणूनां परस्परं भेदको विशेष एव। स तु स्वत एव व्यावृत्तस्तेन तत्र विशेषान्तरापेक्षा नास्तीत्यर्थः ॥ मुक्ता॰ ॥

8. Non-existence can be divided into two kinds: a thing is not *at* or *upon* a particular thing, or *in* a particular thing. In the first instance the thing does not exist *in contact with* (संसर्ग) the thing before our eyes, in the second it is not *identical* with it (तादात्म्य). *e.g.*, इह भूतले घटो नास्ति and अयं घटः पटो न. The first conception modified by the three conditions of time—futurity, past time, and eternity—yields three kinds of अभाव—प्रागभाव, प्रध्वंसाभाव and अत्यन्ताभाव. The second is called अन्योन्याभाव.

9. The *Siddhánta chandrodaya* has द्रव्यत्वसामान्यवत्त्वं गुणवत्त्वं सम-

* विशेष is sometimes defined as सामान्यभिन्नत्वे सति सामान्यशून्यत्वे सति समवेतत्वम्।

